खाली वाणीके आडंबरसे कुछ नहीं होनेवाला है। यदि तुम जा कर उन साधुओंकी और सेठकी क्षमा नहीं मांगो तो मैं तुमको छोडनेवाला नहीं हूं।'

राजाके कथनको ब्राह्मणोंने मान्य किया। साधुओंकी और सेठकी उन्होंने क्षमायाचना की। सेठकी इससे सर्वत्र प्रशंसा हुई कि–अहो! सेठने साधुओंका कैसा प्रभाव बढाया है। इत्यादि। इस तरह श्रावक धर्मका पालन कर वह सेठ मर कर स्वर्गमें गया।

*

## जिनेश्वर सूरिका विविध विषयक शास्त्रोंका परिज्ञान

इस प्रकार प्रत्येक कथामें जिनेश्वर सूरिने किसी-न-किसी विषयको उद्दिष्ट करके अपना बहुशास्त्रपरिज्ञान और सांप्रदायिक सिद्धान्त प्रकट करनेका प्रयत्न किया है। इन कथाओंमें जो प्रासंगिक वर्णन किये गये हैं उनसे ज्ञात होता है कि ग्रन्थकारको अपने सैद्धान्तिक ज्ञानके विषयोंके सिवाय आयुर्वेद, धनुर्वेद, नाट्यशास्त्र, संगीतशास्त्र, कामशास्त्र, अर्थशास्त्र, धातुवाद, रसवाद, गारुड और तांत्रिक शास्त्र आदिके विषयोंका भी बहुत कुछ परिज्ञान था।

सूरसेना-कथानकमें (पृ. २७–२८) गर्भवती स्त्रीको अपने गर्भकी ठीक परिपालना करनेके लिये किस तरहका अपना आहार विहार आदि रखना चाहिये इसका वर्णन आयुर्वेद शास्त्रके कथन मुताबिक किया गया है।

जिनदत्तके कथानकमें (पृ. २४) राजकुमारने धनुर्वेद शास्त्रके अनुसार जो शिक्षा प्राप्त की थी उसका उल्लेख किया है। इस शास्त्रमें धानुष्ककलाके आलीढ, प्रत्यालीढ, सिंहासन, मंडलावर्त आदि जिन प्रयोगोंका वर्णन आता है उनका संक्षिप्त निर्देश भी इस कथानकमें किया गया है।

सिंहकुमारके कथानकमें (पृ. ४०–४१) गान्धर्व कलाका परिचायक कुछ वर्णन करते हुए, तंत्रीसमुत्थ, वेणुसमुत्थ और मनुजसमुत्थ नादोंका वर्णन किया है। नादका उत्थान कैसे होता है, उसके स्थानभेदसे कैसे स्वरभेद होते हैं, और फिर उसके ग्राम, मूर्च्छना आदि कितने प्रकारके रागभेद आदि होते हैं–इसका सूचन किया गया है। इसमें यह भी सूचित किया गया है कि यह शास्त्र तो बहुत बडा कोई लाख श्लोक परिमित विस्तारवाला है।

इसी कथानकमें आगे (पृ. ४५) भरतके नाट्यशास्त्रका उल्लेख है। सिंहनामक राजकुमारके सन्मुख एक कुशल नर्तिका जब नृत्य करने लगी और उसने नृत्यका प्रयोग करते समय यथास्थान ६४ हस्तक और ४ भ्रूभंगोंके साथ तारा, कपोल, नासा, अधर, पयोधर, चलन आदिक भंगोंका अभिनय किया और फिर राजकुमारकी परीक्षाके लिये कपोलभंगके स्थानमें ताराभंग करके विपर्यय अभिनय किया, तो राजकुमारने उसके उस विपर्यय भावके लिये पूछा कि–'यह किस शास्त्रके विधानानुसार अभिनय किया जा रहा है?।' इसके उत्तरमें उसने कहा कि–'भरतशास्त्रके अनुसार।' तो प्रत्युत्तरमें राजकुमार कहता है कि–'भरत शास्त्र तो सूत्र और विवरणके साथ सारा ही मेरे कंठस्थ है। उसमें तो कहीं ऐसा विधान नहीं है।' इत्यादि।

सुन्दरीदत्त कथानकमें (पृ. ७२–७३) धातुवाद और रसवाद शास्त्रका उल्लेख है। रसशास्त्रमें रसके कितने प्रकार हैं और उससे किन पदार्थोंकी निर्मिति आदि होती है इसका संक्षिप्त सूचन है। सुन्दरीदत्त, सागरदत्त नामक सेठका इकलौता पुत्र था। उसको विविध प्रकारकी विद्या-शिक्षा दिलानेके

श्रीजिनदत्तसूरिविरचित

गणधरसार्द्धशतकप्रकरणान्तर्गत

# जिनेश्वरसूरिचरितवर्णनम्।



अथ समस्तसुविहितहितगुणावासवसतिवासोद्धारधुराभारधारणधवलधौरेयान् श्रीमज्जिनेश्वरसूरिपुङ्गवान् चरणाराधनपूर्वकं शरणीकुर्वन्नवदातगुणोत्कीर्त्तनपूर्वकं गाथात्रयोदशकमाह—

१. तेसि पयपउमसेवारसिओ भमरो व सवभमरहिओ।
ससमय-परसमयपयत्थसत्थवित्थारणसमत्थो॥ ६४

२. अणहिल्लवाडए नाडएँ व दंसियसुपत्तसंदोहे।
पउरपए बहुकविदूसगे य सन्नायगाणुगए॥ ६५

३. सड्ढियदुल्लहराए सरसइअंकोवसोहिए सुहए।
मज्झे रायसहं पविसिऊण लोयागमाणुमयं॥ ६६

४. नामायरिएहि समं करिय वियारं वियाररहिएहिं।
वसहिविहारो साहूण ठाविओ ठाविओ अप्पा॥ ६७

५. परिहरियगुरुकमागयवरवत्ताए य गुज्जरत्ताए।
वसहिविहारो जेहिं फुडीकओ गुज्जरत्ताए॥ ६८

६. तिजयगयजीवबन्धू जव्बंधू बुद्धिसागरो सूरी।
कयवायरणो वि न जो विवायरणकारओ जाओ॥ ६९

७. सुगुरुजणजणियभद्दो जिणभद्दो जविणेयगणपढमो।
स-परेसि हिया सुरसुंदरी कहा जेण परिकहिया॥ ७०

८. कुमुयं वियासमाणो विहडावियकुमयचक्कवायगणो।
ओयंमिओ[1] जस्सीसो जयम्मि चंदो व जिणचंदो॥ ७१

९. संवेगरंगसाला विसालसालोवमा कया जेण।
रागाइवेरिभयभीयभवजणरक्खणनिमित्तं॥ ७२

१०. कयसिवसुहत्थिसेवोऽभयदेवोऽवगयसमयपयखेवो।
जस्सीसो विहियनवंगवित्तिजलधोयजललेवो॥ ७३

११. जेण नवंगविवरणं विहियं विहिणा समं सिवसिरीए।
काउं नवंगवित्तरणमुज्झिय भवजुवइसंजोगं॥ ७४

१२. जेहिं बहुसीसेहिं सिवपुरपहपत्थियाण भव्वाणं।
सरलो सरणी समगं कहिओ ते जेण जंति तयं॥ ७५

१३. गुणकणमवि परिकहिउं न सकई सकई वि जेसि फुडं।
तेसि जिणेसरसूरीण चरणसरणं पवज्जामि॥ ७६

---

[1] प्र० उदयमिओ।

मन्थायस्तार्णवाम्भःप्रतिकुहरचलन्मन्दरध्वानधीरः
कोणाघातेषु गर्जत्प्रलयघनघटान्योऽन्यसंघट्टचण्डः।
कृष्णाक्रोधाग्रदूतः कुरुकुलनिधनोत्पत्तिनिर्घातवातः
केनास्मत्सिंहनादप्रतिरसितसखो दुन्दुभिस्ताडितोऽयम् ॥

'बहुकविदूसगे य'त्ति—कवयः काव्यकर्त्तारः, दूष्याणि देवाङ्गवस्त्राणि। 'दूष्यं वाससि तद्गृहे, दूषणीये चे'ति हैमानेकार्थवचनात्। दूष्याण्येव दूष्यकाणि बहूनि प्राज्यानि कवि-दूष्याणि यत्र तस्मिन्। तथा यदि वा सप्तमीलोपात्, बहुकविदूष्यगेये—गेयं गीतम्, इति पत्तनपक्षे। नाटकपक्षे च बहुकविदूषके बहव एव बहुकाः, प्रभूता विदूषका यत्र तथाविधे। विदूषकलक्षणं च रुद्रटालङ्कारेऽभिहितम्। यथा—

भक्तः संवृतमन्त्रो नर्मणि निपुणः शुचिः पटुर्वाग्मी।
चित्तज्ञः प्रतिभावांस्तस्य भवेन्नर्मसचिवस्तु ॥ १
त्रिविधः स पीठमर्दः प्रथमोऽथ विटो विदूषकस्तदनु।
नायकगुणयुक्तोऽथ च तदनुचरः पीठमर्दोऽत्र ॥ २
विट एकदेशविद्यो विदूषकः क्रीडनीयकप्रायः।
निजगुणयुक्तो मूर्खो हासकराकारवेषवचाः ॥ ३ ॥

तथा च नलविलासनाटके विदूषकहासकृद्वचांसि। ततश्च बहुकविदूषके नाटके[१]।

तथा 'सन्नायगाणुगए'त्ति—पत्तनपक्षे, शोभननायकैर्विशिष्टमण्डलगृहग्रामादिस्वामिभिरनुगते संबद्धे। नाटकपक्षे च चतुर्धा नायक उक्तः। तथा च नायकलक्षणं शास्त्रेऽभिहितम्, यथा—

नेता विनीतो मधुरस्त्यागी दक्षः प्रियंवदः।
रक्तलोकः शुचिर्वाग्मी रूढवंशः स्थिरो युवा ॥ १
बुद्ध्युत्साहस्मृतिप्रज्ञाकलामानसमन्वितः।
शूरो दृढश्च तेजस्वी शास्त्रचक्षुश्च धार्मिकः ॥ २
भेदैश्चतुर्धा ललितशान्तोदात्तोद्धतैरयम्।
निश्चिन्तो धीरललितः कलासक्तः सुखी मृदुः ॥ ३
सामान्यगुणयुक्तश्च धीरशान्तो द्विजादिकः।
महासत्त्वोऽतिगम्भीरः क्षमावानविकत्थनः ॥ ४
स्थिरो निगूढाहंकारो धीरोदात्तो दृढव्रतः।
दर्प्पमात्सर्य्यभूयिष्ठो मायाछद्मपरायणः ॥ ५
धीरोद्धतोऽत्यहंकारी चलश्चण्डो विकत्थनः।
सदक्षिणः शठो धृष्टः पूर्वा प्रत्यन्यया हृतः ॥ ६
दक्षिणोऽस्यां सहृदयो गूढविप्रियकृत् सदा।
व्यक्ताङ्गो वितथोऽदुष्टोऽनुकूलस्त्वेकनायकः ॥ ७

एवंरूपचतुर्विधनायकानुगते नाटके[२]।

३. तथा 'सड्ढियदुल्लहराए'त्ति—सह ऋद्ध्या चतुरङ्गचमूरुनिनिचयविरचितचक्रवालविशालमारसारवज्रेन्द्रनील-मरकत-कर्केतन-पद्मराग-मुक्ताफल-शशिकान्त-सूर्यकान्तादिरत्नमणिभाण्डागार-शालि-तन्दुल-गोधूम-मुद्गादिसद्धान्यकोष्ठागार-निर्जितरतिरूपामतिरूपाप्रचुरान्त पुरसार्द्धषोडशवर्णिकसुवर्णरजतादिमहाविभूत्या वर्तते इति सार्द्धिकः। तादृशो दुर्लभराजा महीपतिर्येन तस्मिन् सार्द्धिक-दुर्लभराजे, इति

१ प्र० क्षमापेयमि' २ प्र० वेराढित। ३ प्र० दृष्ट। ४ प्र० °कृच्छ्रः।

पत्तनपक्षे। सा(ना ?)टकपक्षे च सती शोभना उत्कृष्टा धीर्बुद्धिर्येषां ते सद्धियस्त एव सद्धीकाः। स्वार्थे कप्रत्ययः। तेषां सद्धीकानां दुर्लभो दुःप्रापो रागश्चेतसोऽनुबन्धो यत्र तस्मिन् सद्धीकदुर्लभरागे। अत्र धस्य ढत्वं प्राकृतत्वात्। अयमत्राभिप्रायः — किल ये केचन संसारविषमकान्तारपरिभ्रमणनिर्विण्णाः, समस्तापायविनिर्मुक्तमुक्तसौख्याभिलाषुकाः, निरतिचारचारित्रश्रीसमूपगूढविग्रहाः, प्रतिहतकुग्रहाः, तत्त्वविचारचातुरीधुरीणास्त एव तत्त्ववृत्त्या सुमतय इत्युच्यन्ते। तदुक्तम् —

> बुद्धेः फलं तत्त्वविचारणं च देहस्य सारं व्रतधारणं च।
> अर्थस्य सारं तु सुपात्रदानं वाचःफलं प्रीतिकरं नराणाम्॥

ततस्तेषां सुन्दरधिषणानां चेतस्येतदेव सदैव निरर्वि जागर्ति। यथा —

> कान्तेत्युत्पललोचनेति विपुलश्रोणीभरेत्युन्नतो-
> न्मीलत्पीनपयोधरेति सुमुखाम्भोजेति सुभ्रूरिति।
> दृष्ट्वा माद्यति मोदतेऽभिरमते प्रस्तौति विद्वानपि
> प्रत्यक्षाशुचिपुत्रिकां स्त्रियमहो! मोहस्य दुश्चेष्टितम्॥ १
>
> यल्लज्जनीयमतिगोप्यमदर्शनीयं बीभत्समुल्बणमलाविलपूतिगन्धि।
> तद् याचतेऽङ्गमिह कामिकृमिस्तदेवं किं वा दुनोति न मनोभववामता सा॥ २
>
> शुक्रशोणितसंभूतं नवच्छिद्रं मलोल्बणम्।
> अस्थिशृङ्खलिकामात्रं हत योषिच्छरीरकम्॥ ३
>
> धन्यास्ते वन्दनीयास्ते तैस्त्रैलोक्यं पवित्रितम्।
> यैरेष भुवनक्लेशी काममल्लो निपातितः॥ ४

तथा — माता भूत्वा दुहिता भगिनी भार्या च भवति संसारे।
> व्रजति सुतः पितृतां भ्रातृतां पुनः शत्रुतां चैव॥ ५
>
> सुखी दुःखी रङ्को नृपतिरथ निःस्वो धनपतिः
> प्रभुर्दासः शत्रुः प्रियसुहृदबुद्धिर्विशदधीः।
> भ्रमत्यभ्यावृत्त्या चतसृषु गतिष्वेवमसुमान्
> हहा संसारेऽस्मिन् नट इव महामोहनिहतः॥ ६

इत्यादिमोहविकटनाटकं परिभावयतां सतां सुधियां कुतूहलाद् गीत-नृत्तबहुलापरासमञ्जसचेष्टनाटकनिरीक्षणे प्रमादचरिते कथङ्कारं नाम मनागपि मनः प्रादुर्भवीति"।

तथा 'सरसइअंकोवसोहिए'त्ति — सरस्वतीनाम्नी निम्नगा तस्या अङ्क उत्सङ्गस्तेन उपशोभिते विराजिते। यदि वा, सरस्वत्या गीर्देवताया अङ्कश्चिह्नं व्याकरण-साहित्य-तर्कादिशास्त्रपरिज्ञानं येषु ते सरस्वत्यङ्काः। ते चासाधारणविशेषणसामर्थ्यान्नानाशास्त्रकर्त्तारः श्रीमदभयदेवसूरिप्रख्याः सूरयस्तैर्विभूषिते। अथ वा, स्वराः षड्जादयः, स्मृतय ऋषिप्रणीताः, तद्योगात् तद्विद उच्यन्ते। अङ्कानधीयन्ते, अणि, आङ्काः। ततः स्वराश्च स्मृतयश्चाङ्काश्च स्वरस्मृत्याङ्कास्तैरुपशोभिते। भिन्नप्रदेशवर्त्तिगान्धर्विकस्मृत्युच्चारकाङ्कावलीपाठकाधिष्ठित इत्यर्थः। यदि वा, स्वरः शब्दस्तेन च यश उपलक्ष्यते। यदि वा, स्वन एव वचस्तत्प्रधानाः, सत्यः पतिव्रताः स्त्रियस्तासां अङ्कः। 'अङ्को — भूषा-रूपकलक्ष्मसु। चित्राजौ नाटकाद्यंशे स्थाने क्रोडेऽन्तिकागसोः।' इति हैमानेकार्थवचनात्, अन्तिकं तेनोपशोभिते, इति पत्तनपक्षे। नाटकपक्षे च किल —

> पञ्चसन्धि-चतुर्वृत्ति-चतुःषष्ट्यङ्गसंयुतम्।
> षट्त्रिंशल्लक्षणोपेतं नाटकं कवयो विदुः॥

अत्र च चतस्रो वृत्तयः कैशिकी-सात्वत्यारभटी-भारतीलक्षणाः । ततोऽत्र सरस्वतीति शब्दान्तरेण भारती वृत्तिरुपलक्ष्यते । तस्याश्च—

रङ्गं प्रसाध्य मधुरैः श्लोकैः कार्यसूचकैः ।
ऋतुं कञ्चिदुपादाय भारतीवृत्तिमाश्रयेत् ॥ १
'भारती संस्कृतप्रायो वाग्व्यापारो नटाश्रयः ।' २—इत्यादि ।

शेषाणां च वृत्तीनाम्—

तद्व्यापारात्मिका वृत्तिश्चतुर्धा तत्र कैशिकी ।
गीत-नृत्य-विलासाद्यैर्मृदुशृङ्गारचेष्टितैः ॥ ३
विशोका सात्वती सत्त्व-शौर्य-त्याग-दयार्जवैः ।
आरभटी पुनः- मायेन्द्रजालसंग्रामक्रोधोद्भ्रान्तादिचेष्टितैः ॥ ४
शृङ्गारे कैशिकी वीरे सात्वत्यारभटी पुनः ।
रसे रौद्रे सबीभत्से वृत्तिः सर्वत्र भारती ॥ ५

इत्यादिस्वरूपं नाटकलक्षणादवसेयम् । अङ्कस्तु—

प्रत्यक्षनेतृचरितो बिन्दुव्याप्तिपुरस्कृतः ।
अङ्को नानाप्रकारार्थसंविधानरसाश्रयः ॥ ६

इत्यादिनाटकलक्षणोक्तस्वरूपः । ततश्च सरस्वती च अङ्कश्च ताभ्यां उपशोभित इत्यर्थः[७] ।

तथा 'सुहए'त्ति—शोभनाः काम्बोज-वाल्हीक-पारसीकादयः शुक्तिरन्ध्रदेवमणिरोचमानादिप्रशस्त-समस्तलक्षणोपेता उच्चैःश्रवानुकारिणो हयास्तुरगा यत्र, तस्मिन् सुहये । यदि वा, सुभगे हृदयप्रिये—सकलफल-पुष्प-भक्ष्य-वस्त्र-तीक्ष्णनागरखण्डनागवल्लीदलसोपारकपूगफलादिनानाप्रकारमनोहरवस्तुरत्नाकरत्वेन विषयिणां मुग्धबुद्धीनां लोचनसाफल्यकारिदर्शने इत्यर्थः । अन्यथा पुनस्तत्त्ववृत्त्या समस्तसौख्यनिधाननिर्वाणदानदुर्ललितानां परमेष्ठिनामेव वर्ण्यमानं सुभगत्वं श्रेष्ठमिति । नाटकपक्षे च सुधानां सुखदे सातावहे[७] । इति विशेषणसप्तकार्थः ।

अमुमेवार्थं पुनः सविशेषमाह—'वसहिविहारो जेहिं फुडीकओ गुज्जरत्ताए ।' वसत्या चैत्यगृहवासनिराकरणेन परगृहस्थित्या सह, विहारः समयभाषया भव्यलोकोपकारादिधिया ग्रामनगरादौ विचरणम्, वसतिविहारः । स यैर्भगवद्भिः स्फुटीकृतः । सिद्धान्तशास्त्रान्तःपरिस्फुरन्नपि लघुकर्मणां प्राणिनां पुरः प्रकटीकृतः । कस्याम् ? गूर्जरत्रायाम्—सप्ततिसहस्रप्रमाणमण्डलमध्ये । किंविशिष्टायाम् ? परिहृतगुरुक्रमागतवरवार्त्तायामपि । परिहृता श्रवणमात्रेणाप्यवगणिता, गुरुक्रमागता गुरुपारम्पर्यसमायाता, वरवार्त्ता विशिष्ट-शुद्धधर्मवार्त्ता यया सा तथा । तस्यामपि । अपिः संभावने । नास्ति किमप्यत्रासंभाव्यम्, घटत एवैतदित्यर्थः । परं तादृश्यामपि । प्रतीयमानार्थपक्षे पुनः—गुरुः पिता, 'गुरुर्महत्याङ्गिरसे पित्रादौ धर्मदेशके'—इत्यनेकार्थवचनात् । तस्य गुरोः क्रमः गुरुक्रमः । 'क्रमः कल्पांघ्रिशक्तिषु, परिपाट्याम्'—इति वचनात् । कल्प आचारः स्वकन्यकावराङ्गीकारणलक्षणः । तेन गुरुक्रमेण आगता आयाता गुरुक्रमागता । सा चासौ वरवार्त्ता च, 'भर्त्ता भोक्ता पतिर्वरः'—इत्यभिधानचिन्तामणिवचनात्, वरो भर्त्ता तस्य वार्त्ता कथा वरवार्त्ता । परिहृता त्यक्ता गुरुक्रमागतवरवार्त्ता यस्याम्, तन्निवासिलोकेनेति गम्यते । तत्स्थलोकोपचारात् सैव वा व्यपदिश्यते । ततः परिहृता गुरुक्रमागतवरवार्त्ता यया सा तथा, तस्यामिति समासः । अत एव—'गुज्जरत्ताए'त्ति—गुज्जो नट-विटादिः, तत्र रक्ता आसक्ता, तस्यां गुज्जरक्तायाम् । स्वपतिं परित्यज्य कृतान्यगृहमवेशायामित्यर्थः । अत्र परो, अपिर्निन्दायाम् ।

अपि संभावना-शङ्का-गर्हणासु समुच्चये ।
प्रश्ने युक्तपदार्थेषु कामचारक्रियासु च ॥ इत्यनेकार्थपाठात् ।

तथा च शिष्टलोका अपि निन्दन्तः पठन्ति । यथा —

सत्यं नास्ति शुचिर्नास्ति नास्ति नारी पतिव्रता ।
तत्र गूर्जरके देशे एकमाता बहुपिता ॥ १
जराजर्जरसर्वाङ्ग बिभ्रत्यो गूर्जरस्त्रियः ।
दृढकञ्चुकसंदाना मोहयन्ति महीमपि ॥ २ — इत्यादि ।

६. तथा 'तिजयगय'त्ति — त्रिजगद्गतजीवबन्धुर्निविष्टपनिविष्टप्राणिबान्धवः, येषां प्रभूणां बन्धुर्यद्वा बान्धवः सहोदरो बुद्धिसागराभिधानः सूरिराचार्यः । कृतवादरणोऽपि विहितवादकलहोऽपि, न यो विवादरणकारको जातः संपन्न इति विरोधः । अथ च कृतलनामानुरूपव्याकरणोऽपि विवादरणकारको न जात इति विरोधपरिहारार्थः । तदुक्तमेभिरेव श्रीपूज्यैः —

श्रीबुद्धिसागराचार्यैः वृत्तैर्व्याकरणं कृतम् ।
अस्माभिस्तु प्रमालक्ष्म वृद्धिमायातु सांप्रतम् ॥ १ ॥ ('प्रमालक्ष्म' ग्रन्थे )

७–८. तथा, सगुणजनानां प्रकृतिसौम्याकूराशठ-सदाक्षिण्य-विनीत-दयापर-मध्यस्थगुणानुरागिप्रमुखलोकानाम्, जनितभद्रः — दर्शनमात्रेण देशनामृततरङ्गिणीपयःपूरप्लावितश्रवणपुटतटाङ्कुरितविवेककन्दलीकन्दलतया वा मोल्लासितकल्याणः जिनभद्रनामा सूरिः, येषां विनेयगणस्य अन्तेवासिवृन्दस्य मध्ये प्रथमो मुख्यः । स्वपरयोरात्मेतरयोर्हिता अनुकूला 'सुरसुन्दरी कथा' येन परिकथिता । परितः सामस्त्येन आदित एव निर्माय उपदिष्टा भव्यलोकायेत्यर्थः । तथा येषां शिष्यो विनेयो यच्छिष्यः, जगति भुवने, उदयं अभ्युन्नतिम्, चन्द्रपक्षे उदयं पर्वतम्, 'उदयः पर्वतोन्नत्यो'रिति पाठात्, इतः प्राप्तः । किंवत्? चन्द्र इवेत्युपमानम् । किं नामधेयः? इत्याह — जिनचन्द्रसूरिनामा सुगृहीतनामधेयः । उभयोरपि साम्यमाह — कोः पृथिव्या मुत् हर्षः, कुमुदम्, विकासयन् विस्तारयन् — इति सूरिपक्षे । चन्द्रपक्षे पुनः — कुमुदं कैरवं विकासयन् संकुचितं सत् प्रसारयन् । पुनः कीदृशः? विघटितो विश्लेषितो व्यभिचारं विसंवादं असत्पक्षतामिति यावत् प्रापितः । कुमतान्येव कणभक्ष-अक्षपाद-शाक्य-सांख्यादिकुदर्शनान्येव चक्रवाकाः कोकास्तेषां गणः संघातः कुमतचक्रवाकगणः । विघटितः कुमतचक्रवाकगणो येन, स विघटितकुमतचक्रवाकगणः — इत्युभयपक्षेऽपि । यदि वा, विघटितो वियोजितः कुमतचक्रस्य कुदर्शनसमूहस्य वादगणो जल्पसमूहो येन, स विघटितकुमतचक्रवादगणः — इति सूरिपक्षे । चन्द्रपक्षे च — विघटितः कोः पृथिवीलोकस्य मता रूप्याकारधारित्वेन इष्टा ये चक्रवाकास्तेषां गणो येन, स विघटितकुमतचक्रवाकगण इति ।

९. तथा, तस्यैवासाधारणगुणस्तुतिं कुर्वन्नाह — संवेगरङ्गशाला यथार्थाभिधाना महती कथा । कीदृशी? इत्याह — विशालशालोपमा — विशालः विस्तीर्णः स चासौ शालश्च प्राकारो विशालशालः, तेन उपमा सादृश्यं यस्याः, सा विशालशालोपमा । कृता विहिता येन श्रीजिनचन्द्रसूरिणा । किमर्थम्? इत्याह — रागादिवैरिभयभीतभव्यजनरक्षणनिमित्तम् । रागादयो राग-द्वेष-प्रमादाविरति-मिथ्यात्वाज्ञान-मदन-दुष्टमनो-वचन-कायादयस्ते च ते वैरिणश्च शत्रवो रागादिवैरिणस्तेभ्यो भयं साध्वसं तेन भीतास्ता रागादिवैरिभयभीताः, ते च ते भव्यजनाश्च मुक्तिगामिजन्तवश्च, तेषां रक्षणं त्राणं तस्मै, तन्निमित्तम् । यथा विशालशालमध्यस्थाः परचक्र-चौर-चरट-पटलकृतकष्टाभावेन धनकनकरत्नसमृद्धाः प्रसिद्धा जना निराबाधाः प्रमोद-

मनुभवन्ति, एवं यां शृण्वन्तो भव्या निरन्तरं संवेगरङ्गशालमध्यपातिनो राग-द्वेष-प्रमादादिवैरिभिर्न क्षणमपि पराभूयन्ते इत्यभिप्रायः।

१०. तथा, कृतशिवसुखार्थिसेवः विहितमुक्तिसातामिलाषिपर्युपास्तिः, अभयदेवनामा श्रीयुगप्रवर-गणधरः। कीदृशः? 'अवगयसमयपयखेवो' त्ति — सूचनमात्रत्वात् सूत्रस्य, अत्र क्षेपशब्देन निक्षेपो गृह्यते। ततोऽवगतो विज्ञातः समयपदानां सिद्धान्तशब्दानां क्षेपो निक्षेपो नामादिविन्यासो येन, स अवगतसमयपदक्षेपः। नानाविधविशुद्धसिद्धान्तामृतरसपानरसिको हि भगवानिति भावः।

तथा च सिद्धान्ते —

नामं ठवणा दविए खित्ते काले भवे य भावे य।
एसो खलु ओहिस्सा निक्खेवो होइ सत्तविहो॥

इत्यवधिपदस्य सप्तधा निक्षेपः प्रतिपादितः। अथवा, सह मदेन दर्पेण वर्तन्त इति समदाः साहङ्काराः। पदानि — 'पदस्थाने विभक्त्यन्ते शब्दे वाक्येऽङ्कवस्तुनोः। त्राणे पादे पादचिह्ने व्यवसायापदेशयोः'॥ — इत्यनेकार्थवचनात्, शब्दा वाक्यानि वा तेषां क्षेपः प्रेरणम्, उच्चारणमिति यावत्, पदक्षेपः। समदानां दर्पोद्धुरकन्धराणां वादिनां पदक्षेपः पदवाक्योच्चारणं समदपदक्षेपः। ततोऽपकृतः तत्त्वाप्रतिपादकत्वलक्षण-प्रतिज्ञाहानि-प्रतिज्ञान्तर-प्रतिज्ञाविरोधाद्यभिधान-द्वाविंशतिनिग्रहस्थानप्रोद्भावनेन बाधितो निराकृतो निषिद्ध इति यावत् समदपदक्षेपो येन, स अपकृतसमदपदक्षेपः। निरन्तरं विस्फुरद्‌गुरुरोद्धुरतरगीर्वाणवाणीकृपणीप्रहारदारितदर्पिष्ठदुरूढदुर्वादिवृन्द इत्यर्थः। 'ए ए छच्च समाणा' — इति प्राकृतलक्षणादत्र व्याख्याने 'अवगिये'ति प्राप्तावपि इकारस्वराभावः। अपगतो दूरीभूतः समयपदानां सिद्धान्तवाक्यानां क्षेपः, 'क्षेपो गर्वे लङ्घननिन्दयोः, विलम्बे रणहेलासु' — इति वचनात्, निन्दालङ्घनं वा अतिक्रमणं यस्मात्, स अपगतसमयपदक्षेप इति वा। यदि वा, समयः —

'समयः शपथे भाषा-संपदोः कालसंविदोः। सिद्धान्ताचारसङ्केतनियमावसरेषु च॥
क्रियाकारे च निर्देशे' — इति वचनात्,

साध्वाचारः १, सिद्धान्तः २, सङ्केतः ३, अवसरः ४, नियमो ५ वा, पदं स्थानं संयमक्षेत्रा-संयमक्षेत्ररूपम्। क्षेपश्च समयोचितो विलम्बः। ततः समयश्च पदं च क्षेपश्च समयपदक्षेपाः, अवगता ज्ञाताः समयपदक्षेपा येन, स अवगतसमयपदक्षेप इत्यर्थः। यच्छिष्यो येषां पूज्यानां विनेयः।

११. तस्यैवानन्यसाधारणं विशेषणमाह — 'विहियनवंगवित्तिजलधोयजललेवो' त्ति — अत्र जललेपो इत्यत्र डलयोरेकत्वाज्जड इति ज्ञेयम्। तत्रापि 'द्रव्यानयने भावानयनम्' — इति न्यायाज्जाड्यमिति द्रष्टव्यम्। ततो विहिता रचिता, स्वयमिति गम्यते, विशेषेण मुक्त्यर्थिनां सिद्धान्तशरणानां शुद्धात्मनामेकान्तेनैव हिता पथ्या, मुक्तिमार्गप्रदर्शनदीपिकाकल्पत्वेन वा विहिता, नवसंख्यानां स्थानाङ्गादीनां अङ्गानां वृत्तिर्विवरणं नवाङ्गवृत्तिः; विहिता चासौ नवाङ्गवृत्तिश्च सैव जलं सलिलं विहितनवाङ्गवृत्तिजलम्, तेन धौतः प्रक्षालितो जाड्यलेपः अज्ञानपङ्कपुटो येन, स विहितनवाङ्गवृत्तिजलधौतजललेपः। एतच्चा-साधारणगुणवर्णनं प्रभुश्रीजिनवल्लभसूरिभिरपि श्रीचित्रकूटीयश्रीवीरप्रशस्तावकारि। तथा —

श्रीवीरान्वयि वृद्धये गुणभृता नानार्थरत्नैर्दधे
यः स्थानादिनवाङ्गशेवधिगणः कैरप्यनुद्धाटितः।
तद्व्ययः सद्गुरूपदेशविशदप्रज्ञः करिष्यन् शुभां
वृत्तिकुञ्चिकयोदघटद् तमखिलं श्रीसंघतोषाय यः॥

न च वागूदेवताप्रसादोल्लसितवागूविलासानां नवाङ्गीविवरणकरणमत्यद्भुततमं निःसीमशेमुषीसमुल्लास-वासभवनत्वाद् विपश्चिताम्। तदुक्तम्—

उदन्वच्छिन्ना भूः स च निधिरपां योजनशतं
सदा पान्थः पूषा गगनपरिमाणं कलयति।
इति प्रायो भावाः स्फुरदवधिमुद्रामुकुलिताः
सतां प्रज्ञोन्मेषः पुनरयमसीमा विजयते॥ इति।

अनन्तरविशेषणार्थमेव भङ्ग्यन्तरेण स्पष्टयति। येन नवाङ्गविवरणं विहितं विधिना गुरूपदेशानु-सारादिना, समं सह शिवश्रिया सिद्धिलक्ष्म्या, कर्तुं विधातुं नवं अननुभूतपूर्वं नूतनं गवि पृथिव्यां वरणमिव। 'इव'शब्दाध्याहारः कार्यः, 'सोपस्काराणि वाक्यानी'त्युक्तेः। वरणकं चाविधवयुवती-मधुरमङ्गलोच्चारकुमारिकामुखकमलघुसृणमण्डनालङ्कारदानादिपूर्वकः परिणयनसत्यङ्कारदारदानप्रकारः प्रसिद्ध एव। किं कृत्वा? 'उज्झित्ता' विहाय, भवयुवतीसंयोगम्। भवः संसारः स एव युवती, तस्याः संयोगं संपर्कम्। वर्तमाने भवे जन्मनि वा युवतीसंयोगं नारीपरिभोगम्, अङ्गीकृतनिरुपचरितचारित्रश्रीसमुपगूढा-ङ्गत्वाद् भगवत इति।

१२. तथा, यैर्बहुशिष्यैः प्रभूतविनेयैः, शिवपुरपथप्रस्थितानां निर्वाणनगरमार्गं प्रति प्रचलितानां भव्यानां मोक्षार्थिप्राणिनाम्, सरला अकुटिला सरणिः पद्धतिः, मार्ग इत्यर्थः, कथिता उक्ता। पुंस्त्वमत्र प्राकृतत्वात्। ते भव्याः येन मार्गेण यान्ति गच्छन्ति तकत्, शिवपुरं पूर्वनिर्दिष्टम्।

१३. तथा, गुणकणमपि गुणलेशमपि परिकथयितुं न शक्नोति। सत्कविरपि महाविचक्षणोऽपि येषामाराध्यपदाम्भोजानाम्, स्फुटं प्रकटमेतत्, तेषां जिनेश्वरसूरीणां चरणशरणं प्रपद्ये।

॥ इति गाथात्रयोदशकसमासार्थः॥

## [सुमतिगणिकृतं श्रीजिनेश्वरसूरिचरित्रवर्णनम्।]

अत्र चायं वाचनाचार्य पूर्णदेवगणि मुख्यवृद्धसंप्रदायः।

§ १) अम्भोहरदेशे जिनचन्द्राचार्यो देवगृहनिवासी चतुरशीतिस्थावलकनायक आसीत्। तस्य च व्याकरण-तर्क-च्छन्दो-ऽलङ्कारविशारदः शारदचन्द्रचन्द्रिकावदातनिर्म्मलचेता वर्द्धमाननामा शिष्योऽभूत्। तस्य च प्रवचनसारादिग्रन्थं वाचयतश्चतुरशीतिराशातना आयाताः। ताश्चेमाः, तथा हि—

'खेलं[1] केलि[2] कलिं[3] कला[4] कुललयं[5] तंबोल[6] मुग्गालयं[7]'—[इत्यादि]

आसायणाओ भवभमणकारणं इय विभाविउं जइणो।
मलिण त्ति न जिणमंदिरम्मि निवसंति इय समओ॥

एताश्च परिभावयतस्तस्येयं मनसि भावना समजनि—यद्येताः कथञ्चिद् रक्ष्यन्ते तदैव भवकान्तार-निस्तारः स्यात्। अन्यथाऽगाधभवाम्भोधिमध्यनिपतितैरस्माभिरनन्तशो जन्म-जरा-मरण-दारिद्य-दौर्भाग्य-रोग-शोकादिसंतापपात्रमेवात्मा आत्मदौरात्म्यादात्मनैव कृतो भविष्यति। यत उक्तम्—

आसायणमिच्छत्तं आसायणवज्जणा य सम्मत्तं।
आसायणानिमित्तं कुव्वइ दीहं च संसारं॥

अयं च स्वकीयशुभाध्यवसायस्तेन वर्द्धमानाभिधानसाधुना स्वगुरवे निवेदितः। ततस्तेन गुरुकर्मणा जिनचन्द्राख्येन तद्गुरुणा चिन्तितम्—अहो! न सुन्दरोऽस्यायमाशयः, तदेनमाचार्यपदे संस्थाप्य देवगृहा-

रामादिप्रतिबन्धनियन्त्रितं करोमी'ति । तथैव चाकारि तेन । तथापि तस्य पुण्यात्मनो मनो न रमते चैत्यगृहावस्थितौ । युक्तं चैतद् । यतः –

> दुर्गन्धपङ्ककलिते शयतापरीतदुस्त्रोटिकोटिकथकोटकुटुम्बकीर्णे ।
> त्यक्ते सुपद्मिभिरलम्पत शुभ्रपक्षाः किं कुत्सिते सरसि पादमपि क्षिपन्ति ॥

ततो 'वत्स ! एतत्सर्वं देवगृहमारामवाटिकादिकं त्वदायत्तं स्वेच्छया विलस । माऽस्मांस्त्वदेकप्रमाणान् मुञ्च' इत्यादिकोमलालापपुरस्सरं निवार्यमाणोऽपि –

> 'क ईप्सितार्थस्थिरनिश्चयं मनः पयश्च निम्नाभिमुखं प्रतीपयेत् ॥'

इति न्यायेन 'यथा तथा प्रभो ! कस्यापि सुविहितगुरोरङ्गीकारेण मया स्वहितमनुष्ठातव्यम्' इति विहितनिश्चितप्रतिबन्धः स्वाचार्यानुज्ञातः कतिपययतिपरिवृतो ढिल्ली-वादलीप्रमुखस्थानेषु समाययौ ।

§ २ ) तस्मिंश्च समये तत्रैव श्रीउद्द्योतनाभिधानसूरयः सुविहिताः पूर्वमेव तत्पुण्यप्रेरिता इव विहृता अभवन् । ततस्तच्चरणकमलमूले शुद्धमार्गतत्त्वं निश्चित्य ते श्रीवर्द्धमानसूरयः सुनिश्चितोपचितहितसंपत्तिमुपसंपत्तिमाददिरे । तदनन्तरं श्रीवर्द्धमानसूरीणामियं चिन्ता जाता – यदुतास्य सूरिमन्त्रस्य कोऽधिष्ठाता ? तत्परिज्ञानायोपवासत्रयं चक्रुः । यावत्तृतीयोपवासे धरणेन्द्रः समागतः । उक्तं च तेन यथा – 'सूरिमन्त्रस्याहमधिष्ठायकः ।' निवेदितं सर्वसूरिमन्त्रपदानां प्रत्येकं फलम् । ततो जातः स्फूर्तिमानाचार्यमन्त्रः । तेन सत्स्फूर्तयः सपरिवारा वर्द्धमानसूरयो जज्ञिरे ।

§ ३ ) अस्मिन् प्रस्तावे विज्ञप्तं पण्डितजिनेश्वरगणिना – 'भगवन् ! ज्ञातस्य जिनमतस्य किं स्याद् विशिष्टं फलम्, यदि क्वापि गत्वा सन्मार्गप्रकाशो न विधीयते ? श्रूयते च विस्तीर्णो गूर्जरत्रादेशः, किन्तु प्रचुरचैत्यवासाचार्यव्याप्तश्च । अतो यदि तत्र गम्यते इति मे मनः ।' ततः श्रीवर्द्धमानाचार्यैरुक्तम् – 'युक्तमुक्तं भवता । परं शकुन-निमित्तादिकं परिभाव्यते ।' परिभावितं जातं च शुभशकुनादिकम् । ततो भामहमहत्सार्थसहिता आत्मनाऽष्टादशाश्चलिताः सूरयः । क्रमेण च पल्लीं प्राप्ताः । बहिर्भूमिगतानां तत्र पण्डितजिनेश्वरगणिसमन्वितानां श्रीवर्द्धमानसूरीणां मिलितः सोमध्वजो नाम जटाधरः । जाता तेन सहेष्टगोष्ठी । ततो गुणं दृष्ट्वा चक्राणे प्रश्नोत्तरे सूरिभिः । यथा –

> का दौर्गत्यविनाशिनी हरिविरिञ्च्युग्रप्रवाची च को
> वर्णः को व्यपनीयते च पथिकैरत्यादरेण श्रमः ।
> चन्द्रः पृच्छति मन्दिरेषु मरुतां शोभाविधायी च को
> दाक्षिण्येन नयेन विश्वविदितः को वा भुवि भ्राजते ॥

अत्रोत्तरम् 'सो म ध्व जः' – द्विर्व्यस्तसमस्तः । सा ओम्, अध्वजः, सोमध्वजः । ततस्तुष्टोऽसौ जटाधरः । समुत्पन्नः श्वेताम्बरदर्शनेऽस्य बहुमानः । कृता प्रासुकान्नदान-लोकसमक्ष-गुणस्तुत्यादिका प्रतिपत्तिस्तेन । तदनन्तरं भामदसंघातेन सह प्रस्थिताः । प्राप्ताश्च क्रमेणाणहिल्लपत्तने । दृष्टीर्णा मण्डपिकायाम् । तस्यां च प्राकारमात्रेऽपि नास्त्याश्रयः । सुविहितसाधुभक्तः श्रावकोऽपि नास्ति, यः स्थानादिकं याच्यते । यावत्तत्रोपविष्टानामेव घर्मो निकटीभूतः ।

तत्रोऽभिहितं पण्डितजिनेश्वरेण यथा – 'भगवन् ! एवमेवमुपविष्टानां न किमपि कार्यं सिद्ध्यति ।' श्रीवर्द्धमानसूरयः – 'तर्हि सुशिष्य ! किं क्रियते ? ।' जिनेश्वरपण्डितः – 'यदि यूयं मन्यध्वे तदोच्चैर्गृहं दृश्यते तत्र व्रजामि ।' वर्द्धमानसूरयः – 'व्रज ।'

ततः सुगुरुचरणाम्भोजान्यभिवन्द्य गतस्तत्र । तच्चोच्चैर्गृहं श्रीदुर्लभराजमहीवल्लभसत्कपुरोहितसंबन्धि वर्त्तते। तदानीं च पुरोहितः स्वशरीराभ्यङ्गं कारयंस्तिष्ठति । पण्डितजिनेश्वरेण तस्याग्रतः स्थित्वा पठितं यथा—

**सर्ग-स्थिति-क्षयकृतो विशेषवृषसंस्थिताः। श्रिये वः सन्तु विप्रेन्द्र ! ब्रह्म-श्रीधर-शङ्कराः ॥**

इत्याशीर्वादप्रसन्नमानसः स राजपुरोधाश्चिन्तयति—अहो! विचक्षणोऽयं व्रती कश्चित् । अत्रान्तरे मन्दिरान्तर्वर्त्तिविविक्तशालाप्रदेशे—'ॐऋषभं पवित्रं पुरुहूतमध्वरं यज्ञं महेशम्' इत्यादिवेदवाक्य-परावर्त्तनामन्यथाकुर्वतश्छात्रान् श्रुत्वोक्तं पण्डितजिनेश्वरेण—'मैत्थं वेदपदानोच्चारिष्ट, किं तर्हीत्थम्' इत्येतदाकर्ण्य विस्मयमानसः पुरोधाः कोमलगिरा पप्रच्छ—'नन्वनधीतं नहि कश्चिन्नाम शुद्धमशुद्धं वेदमिति परिच्छिनत्ति। ततो वैपरीत्येन वेदवाक्यपरावर्त्तनं युष्माभिर्वेदपाठानधिकारिभिः शूद्रैः कथमवागामि ? ।'

जिनेश्वरपण्डितेनोक्तम्—'महाभाग्यशेखर! द्विजेश्वर! यथा आत्थ यूयम्, तथैवैतत्। नहि शूद्राणां वेदपाठाधिकारः। किन्तु नहि वयं शूद्राः। किं तर्हि, वेदचतुष्टयाध्यायिनो विप्रजातिनः। तथा—

**तपसा तापसो ज्ञेयो ब्रह्मचर्येण ब्राह्मणः। पापानि परिहरंश्चैव परिव्राजोऽभिधीयते ॥**

इति पूर्वर्षिप्रतिपादितब्रह्मचरणलक्षणा एव वयम्।'

पुरोहितः सानन्दम्—'भो! यतिपुङ्गवाः! कुतो देशाद् यूयमत्रागताः ? ।'

पण्डितजिनेश्वरगणिः—'ढिल्लिकापुरीतिलकाङ्कितात्।'

पुरोधाः—'किं तद् धन्यं धरणीतलमेतस्मिन् पत्तने यद्लङ्कृते चक्रादिलक्षणोपलक्षितं युष्मादृशमुनिराज-हंसचरणन्यासैः ? ।'

पं० जिनेश्वरः—'विशालतपनातपशालायां वयं स्थिताः स्मः।'

पुरोहितः—'किमिति तत्रावस्थिताः ? ।'

पं० जिनेश्वरः—'पुरोहितमिश्राः! शेषस्थानानां विरोधिभिरवष्टब्धत्वात्।'

पुरोहितः—'भवद्दृशानामपि शान्तात्मनामकृतागसां केचिद् विपक्षाः सन्ति ? ।'

पं० जिनेश्वरः—द्विजोत्तम!

**मुनेरपि वनस्थस्य स्वानि कर्माणि कुर्वतः। उत्पद्यन्ते त्रयः पक्षा मित्रोदासीन-शात्रवः ॥**

पुरोहितः—'अहह! चन्दनशीतलानामपि युष्मादृशानां पापाः केचिदप्रियकारिणः ?'—इति क्षणं विषद्य, पुनः 'अथ के पुनस्ते दुर्विधेया मया ज्ञेयाः ? ।'

पं० जिनेश्वरः—'महात्मन्! अस्तु कल्याणमेषाम्। किं नस्तेषां चर्चाकदर्थनेन।'

पुरोहितः—स्वगतम्, अह,

**त एते सुकृतात्मानः परदोषपराङ्मुखाः। परोपतापनिर्मुक्ताः कीर्त्यन्ते यत्र साधवः ॥**

ततः कथमेते महात्मानः स्वविरोधिनां नामोत्कीर्त्तनं करिष्यन्ति ? किञ्च, ममापि तेषां दुरात्मनां नामश्रवणमश्रेयस्करम्। तद्भवत्वेवमन्यत् पृच्छामीति। प्रकाशम्—'एतावन्त एव यूयमागताः स्व किमुतान्येऽपि केचिन्मुनयः सन्ति ? ।'

पं० जिनेश्वरः—'येषां वयं शिष्यलेशास्ते आसते स्वमनीषाविशेषविक्षिप्तसुरगुरवस्त्रिजगद्गुरवोऽसद्गुरवः परित्यक्तपरिग्रहगृहिणीधनधान्यस्वजनस्नेहसंबन्धभूरयः सुगृहीतनामधेयाः श्रीवर्द्धमानसूरयः।'

पुरोधाः—सविस्मयम्, 'सर्वेऽपि कियन्तो भवन्तः ? ।'

पं० जिनेश्वरः—'अष्टादशपापस्थानविरता अष्टादशसंख्या वयं वर्त्तामहे ।'

पुरोहितः—स्वगतम्, 'अहो! यादृशाः—

त्यक्तदाराः सदाचारा मुक्तभोगा जितेन्द्रियाः। गुरवो यतयो नित्यं सर्वजीवाभयप्रदाः॥

इति दमाध्याये प्रतिपादिताः सद्गुरवस्तादृशा एते महात्मानः । तदेतान् स्वगृह एवानाय्य निर्धूत-रजसः, तच्चरणपूतरजसा पुनामि स्वगृहाङ्गणम् । भवामि सततमेतेषां प्रत्यक्षपुण्यपुञ्जानामीक्षणेनेक्षण-साफल्यभागिति ।' पुनः प्रकाशम्,—'भो महासत्त्वाः! चतुःशालविशालमदीयगृहे एकस्मिन् द्वारे प्रविश्य एकस्यां शालायां तिरस्करिणीं दत्त्वा तिष्ठथ सर्वेऽपि यूयं सुखेन । भिक्षावेलायां मदीयमा-नुषेऽङ्गीकृते ब्राह्मणगृहेषु भिक्षयाऽपि न किमपि क्षूणं भवतां भविष्यति ।'

ततः पण्डितजिनेश्वरगणिः—'केऽन्ये भवद्भ्योऽप्यौचितीचारुचेतसः' इति भणन्,

अपेक्षन्ते न च स्नेहं न पात्रं न दशान्तरम् । सदा लोकहितासक्ता रत्नदीपा इवोत्तमाः ॥

इति च पठन्, गतः स्वगुरुसमीपे । निवेदितः समस्तोऽपि वृत्तान्तः । ततः समीचीनमेतदिति विचिन्त्य तेऽपि तथैव सर्वं कुर्वन्ति ।

§४) एवं च तत्र स्थितानां स्वधर्मकर्मनिरतानां पत्तनमध्ये समुच्छलिता वार्त्ता—यदुत वसतिपाला यतयः समायाताः सन्ति । श्रुत्वा च चैत्यगृहनिवासिभिः साध्वाभासैः । ततस्तैर्मिलित्वा आलोचितम्—'यदुताहो! न शोभनमेतद् यदेते वसतिपाला अत्राजग्मुः । यतः—"वयं सुविहिताः सदैवागमोक्त-क्रियाकारिणश्चैत्यवासपरिहारिणः, एते पुनः स्वच्छन्दचारिणः, सिद्धान्तोत्तीर्णभवार्णवपातकारिदेव-द्रव्यापहारिणः, सदैकत्र वासिनः, कामोन्मादनताम्बूलाश्वान्तास्वादनसचित्रविचित्रान्दोलनपल्यङ्कगण्डोपधा-नगल्लमसूरिकादिशृङ्गारचेष्टाविशेषप्रकटनेन नटविटादिवद् महाविलासिनः"—इत्याद्युल्लपनपूर्वकमात्मानं वक्रवृत्त्या परमधार्मिकत्वेन जनमध्ये प्रतिष्ठापयिष्यन्ति; अस्माँश्च सर्वत्रानाचारिण इति कृत्वा व्यवस्थाप-यिष्यन्ति । ततो यावदेष कोमल एव व्याधिस्तावदेवोच्छिद्यते'—इत्यात्मशङ्कितैस्तैरालोच्य चिन्तित उपायः । यथा—'वयं तावदधिकारितनयानध्यापयामः । ते चास्मत्कथितकारिण एव । ततस्तानावर्ज्य तन्मुखेन दूषणमेषामारोप्यैतानुच्छेदयामः ।' ततस्तैराहूता अधिकारिपुत्राः स्वच्छात्राः । प्रलोभिताः खर्जूर-द्राक्षावर्षोपलादिप्रदानेन । भणिताश्च युष्माभिर्लोकमध्ये एवं भणनीयम्—'यदुतैते केचन परदेशात् श्वेताम्बररूपेण श्रीदुर्लभराजराज्यच्छिद्रान्वेषिणश्चराः समागताः सन्ति ।' कृतं च तत् तथैव तैः । ततः सा वार्त्तोदकान्तस्तैलबिन्दुरिव प्रसृता पत्तनमध्ये । प्रसरन्ती च राजसभायामपि प्राप्ता । ततो दुर्लभराजमहीभुजाऽभिहितम्—'अहो! यद्येवंविधाः क्षुद्राः कापटिकाः श्वेतपटाः केऽप्याजग्मुः । ततस्तेषामाश्रयः केन दत्तः?।' तत्रस्थेनैव केनाप्युक्तम्—'देव! तवैव गुरुणा ते स्वगृहे धारिताः।' ततोः दुर्लभराजेनोक्तम्—'आकारय तम् ।' आकारितः पुरोहितः, भणितश्च—'भो शान्तिकर्त्तः! श्वेताम्बररूपधारिणो ये हेरिका अत्र आगतास्तेषां किमिति त्वया स्थानमदायि? ।' पुरोहितेनोक्तम्—'केनेदं दूषणमुद्भावितम्—यत् हेरिकास्ते? । किं बहुना यद्येषां दूषणमस्ति, तदा पारुत्थलक्षेणैषा कर्पटिका प्रक्षिप्ता । पुनर्यद्येषां मद्गृहवर्तिनां मुनीनां मध्ये दूषणगन्धोऽप्यस्ति तदोत्पाटयत्वेतां तद्दूषण-वक्तारः?'—इत्युक्त्वा स्थितः पुरोहितः । ततः सन्ति तत्रामात्यश्रेष्ठिप्रमुखाः प्रभूतास्तद्भक्ताः प्रधानपुरुषाः ।' परं न कश्चिदुत्पाटयति कर्पटिकाम् । को नाम परकीयां रुष्टां गृह्णाति? । ततो भणितं राज्ञः पुरः पुरोहितेन—'देव!

न विना परिवादेन रमते दुर्जनो जनः । श्वेव सर्वरसान् भुक्त्वा विनाऽमेध्यं न तृप्यति ॥
महतां यदेव मूर्धनि तदेव नीचास्तृणाय मन्यन्ते । लिङ्गं प्रणमन्ति बुधाः काकः पुनरासनीकुरुते ॥

ततो देव ! ये केचन मद्गृहे वर्त्तन्ते मुनयस्ते मूर्त्तिवन्तो धर्मपिण्डाः क्षान्ति-दान्ति-सरलत्व-मृदुत्व-तपः-शील-सत्य-शौच-निष्परिग्रहत्वप्रमुखगुणरत्नकरण्डाः, चेतसाऽपि न पिपीलिकाया अप्युपताप-मिच्छन्ति; कुतः पुनरेवंविधमिह-परलोकविरुद्धमकार्यं ते करिष्यन्ति ? अतो न तेषां दूषणलेशोऽप्यस्ति । परं केषाञ्चिद् दुरात्मनां विलसितमेतदिति ।' राज्ञोऽपि चित्ते प्रतिभातं तद्, यथाह पुरोहितस्तथैवैतत् संभाव्यत इति ।

§५ ) ततः एतां वार्त्तामाकर्ण्य सर्वैरपि सूराचार्यप्रभृतिभिः परिभावितम् – यदेतान् परदेशागतान् वादे निर्जित्य निस्सारयिष्यामः । ततस्तैराहूयाभिहितः पुरोहितो यत् – 'युष्मद्गृहावस्थायियतिभिः सह वयं विचारं कर्तुकामा आस्महे ।' तेषां पुरस्तेनोक्तम् – 'तान् पृष्ट्वा यत् स्वरूपं तद् भणिष्यामि ।' ततः स्वसदने गत्वा भणितास्तेन ते भगवन्तो यथा – 'विपक्षाः श्रीपूज्यैः सह विचारं कर्तुं समीहन्ते ।' तैरुक्तम् – 'किमत्रायुक्तम् ? एतदर्थमेव वयमागताः । परमत्रार्थे त्वया न मनागपि भेतव्यम् । किन्त्विदं( त्थं ) ते युष्माभिर्वक्तव्याः – 'यदि यूयं तैः सह विवदितुकामास्तदा ते श्रीदुर्लभराजप्रत्यक्षं यत्र भणिष्यथ तत्र विचारं करिष्यन्ति । ते हि सद्धर्ममार्गप्रकटनार्थमेव विसंकटग्रामनगरादिष्व-टाट्यमानाः सर्वत्र विरचन्तीति । ततो राजसमक्षं ते विचारकरणेऽतीव सोत्कण्ठास्तिष्ठन्तीति ।' ततस्तेषां पुरस्तथा पुरोधसोदिते, तैः समस्तैरात्मपाण्डित्यगर्वितैश्चिन्तितम् – सर्वेऽप्यधिकारिणस्तावदस्मद्-वशवर्त्तिनस्तेभ्यो वैदेशिकेभ्यः कीदृगस्माकं भयमिति । भणितं च – 'भवतु राजसमक्षं विचारः ।' ततः प्रमाणितं तद्वचः पुरोहितेन । तैरप्यमुकस्मिन् वासरे पंचासरीयबृहद्देवगृहे विचारो भविष्यतीति निश्चित्य, निवेदितं सर्वेषां पुरः । पुरोहितेनाप्येकान्ते भणितो नृपो यथा – 'देव ! आगन्तुकमुनिभिः सह स्थानस्थिता विचारं विधातुकामास्तिष्ठन्ति । स च विचारो न्यायवादिराजसमक्षं क्रियमाणः शोभते । ततो युक्तायुक्तविचारदक्षैस्तत्र विचारप्रस्तावे भवद्भिः प्रसद्य प्रत्यक्षैर्भवितव्यम् ।' राज्ञोक्तम् – 'किम-युक्तम् ? कर्तव्यमेवैतदस्माभिः ।

§६ ) ततो निष्टंकितदिने तस्मिन्नेव देवगृहे सिंहासनगद्दिकाचक्कलकादिप्रचुरतरमहत्तरासनाटोपेन पूर्वदेश-दक्षिणदेशाद्युद्भवविचित्रकचिका-नर्मिका-पट्ट-हीर-जादरि-गोञ्जिकानिरभ्रकीटश्वेतपीठराढिकापकल-पट्टादिश्वेततराच्छाच्छतरप्रच्छादनपटीकटीतटीपट्टकप्रलम्बलम्बमानदशादण्डोद्दण्डस्पष्टनष्टाभिधेयरजोहरण-नामधेयपदार्थकाण्डप्रमाणातिक्रान्तसन्दशप्रान्तमुखवस्त्रिकोज्ज्वलमहामूल्यसूक्ष्मलोचिकामेचककीचकोज्ज्वल-चकचकायमाननिर्माणदण्डकादिवेषाडम्बरेण बहलताम्बूलरसाहितदशनरङ्गलिङ्गलिङ्गिनीतूलिकापट्टांशुका-च्छादनपट्टकलितललितसुखासनश्रीकरणिकामात्यश्रेष्ठिप्रमुखधनाढ्यश्राद्धनानाभक्तिविशेषवेषसविशेषभूषण-भूषाविष्कृतस्फारतारशृंगारश्राविकाविहितस्वकीयाचार्यगुणवर्णनानिबद्धधवलमङ्गलगीतोच्चारादिबृहत्स्फटाटो-पेन सूराचार्यप्रभृतिचतुरशीतिसंख्यचैत्यवास्याचार्याः सूर्योदय एवागत्य स्वहस्तन्यस्तवादस्थलपुस्तिकाः समु-पविविशुः । राज्यप्रधानपुरुषैराकारितः श्रीदुर्लभराजमहाराजोऽपि महता भटचट[परि]करेणागत्योपविष्टस्तत्र । ततोऽभिहितं राज्ञा – 'पुरोहित ! क्षिप्रमाह्वानय तान् स्वसम्मतान् देशान्तरायातानार्यान् ।' ततस्त्वरितत्वरितपदं गत्वा श्रीवर्द्धमानसूरीन् एवं विज्ञपयति – 'भगवन् ! पंचासरीयदेवगृहे सर्वेऽप्याचार्याः सपरिवारा उपविष्टाः । श्रीदुर्लभराजमहीवल्लभश्च । सर्वेऽपि आचार्याः पूजितास्ताम्बूलदानेन भूभुजा । इदानीं युष्माकमागमनमव-लोक्यते ।' एतत् पुरोहितमुखादाकर्ण्य श्रीवर्द्धमानसूरयः श्रीसुधर्मस्वामि-जंबूस्वामिप्रभृतिचतुर्दशपूर्वधरान्

युगप्रधानानपरानपि सूरीन् विन्यस्य हृदयपुण्डरीके पण्डितश्रीजिनेश्वरप्रमुखकतिपयगीतार्थसुसाधुभिः सह प्रचलिताः पंचासरीयचैत्याभिमुखम् । कन्यागोगङ्घमेरीदधिफलपुष्पमालाद्यालोकमांगलिक्यरूपानुरूपशुशकुनदर्शनसंभाविताः संभाविताभिलाषितसिद्धयः प्राप्ताश्च तत्र । उपविष्टाः पंडितजिनेश्वरदत्तनिषद्यायां श्रीदुर्लभराजदर्शितस्थाने । पण्डितजिनेश्वरोऽपि गुरुणाऽनुज्ञातोऽवनतगात्रः स्वगुरुपादान्त एवोपविवेश ।

§७ ) अत्रान्तरे नृपतिस्ताम्बूलदातुं प्रवृत्तः । ततः समासमक्षमाचचक्षे भगवद्भिः श्रीवर्द्धमानाचार्यैः— 'महाराज ! असदागमे मुनीनां ताम्बूलभक्षणस्नानपुष्पमालागन्धनखकेशदशनादिसंस्कारादिकं निषिद्धमस्ति । ततः—

संजमे सुट्ठियप्पाणं विप्पमुक्काण ताइणं । तेसिमेयमणाइन्नं निग्गंथाण महेसिणं ॥
उद्देसियं कीयगडं नियागमभिहडाणि य । राइभत्ते सिणाणे य गंधमल्ले य वीयणे ॥
सव्वमेयमणाइन्नं निग्गंथाण महेसिणं । संजमम्मि य जुत्ताणं लहुभूयविहारिणं ॥

इत्यागमं पठित्वा, यद् राजाग्रतो व्याख्यानार्हं तद् व्याख्यातं श्रीमदाचार्यैः ।

राजा—'ताम्बूलभक्षणे को दोषः ?'

आचार्याः—'कामरागवर्द्धनं ताम्बूलमिति जगद्विदितमेतत् । तथा च पठ्यते लोके—

ताम्बूलं कटुतिक्तमुष्णमधुरं क्षारं कषायान्वितं
पित्तघ्नं कफनाशनं कृमिहरं दौर्गन्ध्यनिर्नाशनम् ।
वक्त्रस्याभरणं विशुद्धिकरणं कामाग्निसंदीपनं
ताम्बूलस्य सखे त्रयोदशगुणाः स्वर्गेऽपि ते दुर्लभाः ॥

अतो ब्रह्मचारिणां तांबूलभक्षणं रागवृद्धिहेतुत्वादत्यन्तं दुष्टमेव । स्मृतावप्युक्तम्—

ब्रह्मचारियतीनां च विधवानां च योषिताम् ।
ताम्बूलभक्षणं विप्रा गोमांसान्न विशिष्यते ॥
स्नानमुद्वर्तनाभ्यंगनखकेशादिसंस्क्रियाम् ।
धूपं माल्यं च गन्धं च त्यजन्ति ब्रह्मचारिणः ॥

एतच्छ्रुत्वा विवेकप्रत्येकलोकस्य जातो हृदये प्रमोदो गुरुषु बहुमानश्च । श्रीवर्द्धमानाचार्यैरुक्तम्— 'आचार्यैः सह विचारे प्रक्रान्तेऽस्मच्छिष्य एष पण्डितजिनेश्वरो यदुत्तरप्रत्युत्तरं प्रदास्यति तदस्माकं प्रमाणम् ।' सर्वैरपि भणितमेवमस्तु ।

§८ ) ततश्चतुरशीत्याचार्यघटागरिष्ठेन सूराचार्यचैत्यवासिना जल्पितम्, यथा—'शृण्वन्तु भोः ! सर्वेऽपि क्षितिपतिमन्त्रिप्रभृतयो लोकाः ! यदस्माभिरुच्यते ।' मन्त्र्यादयस्तत्साक्षिका वदन्ति—'वदन्तु भवन्तस्तिष्ठामो वयमेते श्रवणोर्ध्वीकृतश्रवणाः ।'

राजा पुनस्तदानीं समस्तानपि तांश्चैत्यवास्याचार्यसाध्वाभासांश्च चकचकायमानोच्छ्रितसमीकृतनतात्रिवलिशिरःकुन्तलांस्ताम्बूलरसरञ्जितौष्ठपुटरदनान् महत्कौतूहलावलोकनाक्षिप्तमृगेक्षणानिरीचिक्षिपेतस्ततः शिरस्कारेक्षणेन हृष्टपुष्टाङ्गान् घृष्टालक्तकरसरक्तपादनमांसीदर्गीकृतनखशुक्तिकान्, सुरभिचम्पकतैलाभ्यङ्गगात्रोच्छलद्दूरपरिमलान् पटवासधूपितपटावगुण्ठितान् वीक्ष्य, चिन्तयां चकार—अहो ! सविलासचेष्टकायाः खल्वमी विटप्राया महामूढत्वेन व्यतिरिच्यन्ते नेष्टकायाः । पश्यतामी पुनर्महानुभावाः समभावानीचा अपि नीचासनोपविष्टाः समूलमूर्द्धजोन्मूलनावलोक्यमानासमासमारचितावितततरपरुष-

धूसरोत्तमाङ्गकेशाः मलपटलविशदंशुकरदनदेहपादविपादिकाः दर्शनमात्रेणैवोपलभ्यमानशान्ततालिङ्गित-तपोनिष्ठमूर्त्तयः। निश्चितं ये केचन गुणरत्नालङ्कृतगात्रास्त्रिजगन्महनीयमहाशीलव्रतपात्राण्युच्यन्ते ते एते महाव्रतिनः—इत्येवं विमृशति क्षितीशे, अत्रान्तरे समुपन्यस्तं सूराचार्येण।

§९) यथा—'भो भोः वसतिपालाः! सावधानमनोभिः श्रूयतां युष्माभिः। जिनभवननिवास एवेदानींतनमुनीनां समुचितः, तत्रैव निरपवादब्रह्मव्रतस्य संभवात्। यतीनां च तदेव गवेष्यते। न च शेषव्रतानामिव तत्रापि सापवादत्वमस्तीति वाच्यम्। सिद्धान्तेऽस्य सर्वव्रतेषु निरपवादत्वेनैव प्रतिपादनात्। तथा चोक्तम्—

**नवि किंचि अणुन्नायं पडिसिद्धं वावि जिणवरिंदेहिं। मुत्तुं मेहुणभावं न तं विणा रागदोसेहिं॥**

वसतिवासे तु युवतीजनमनोहारिशब्दश्रवणादेर्न ब्रह्मव्रतं सम्यग् निर्वोढुं पार्यते, उत्कलिकादिप्रादुर्भावात्। तथा हि—नितम्बिनीनां कोकिलाकलकूजितं गीतादिरवमधरितरतिसौन्दर्यं च रूपमुपलभ्य भुक्तभोगानां यतीनां पूर्वानुभूतनिधुवनविलसितप्रतिसन्धानादयः, अभुक्तभोगानां च तत्कुतूहलादयः प्रादुर्भवेयुः। यतीनां च सततं कर्णपीयूषवर्षिविशदगम्भीरमधुरस्वाध्यायध्वानं निशम्य केषांचित्तु शरीरागण्यलावण्यश्रियं निर्वर्ण्य प्रोषितपतिकादीनां तरुणीनां रिरंसादयः प्रादुष्युः। एवं चान्योऽन्यं निरन्तररूपावलोकनगीतश्रवणादिभिर्दुर्मथमन्मथदौःस्थ्याच्चारित्रमोपादयोऽनेके दोषाः पुष्येयुः। यथोक्तम्—

**थीवज्जियं वियाणह इत्थीणं ठाण जत्थ रूवाणि।**
**सद्दा य न सुव्वंती तावि य तेसिं न पिच्छंति॥**
**बंभवयस्स अगुत्ती लज्जानासो य पीइवुड्ढी य।**
**साहुतवोधणनासो निवारणा तित्थपरिहाणी॥**

लौकिका अप्याहुः—

**शृणु हृदय रहस्यं यत्प्रशस्यं मुनीनां न खलु न खलु योषित्सन्निधिः संविधेयः।**
**हरति हि हरिणाक्षी क्षिप्तमक्षिक्षुरप्रप्रहतशमतनुत्रं चित्रमप्युन्नतानाम्॥**

जिनगृहवासे तु न तथा निरन्तरस्त्रीसंसक्तिसंभवः। कदाचिच्चैत्यवन्दनार्थमेव क्षणमागत्य गत्रीणां श्राविकादीनां यतिभिः सह तथाविधप्रसंगानुपपत्तेः। तस्मात् प्राणातिपातादिवदनेकदोषदुष्टत्वेन परगृहनिवासत्वेऽनुपपन्ने सति जिनगृहवास एवाधुनिकसाधूनां सांगत्यं निरत्तीयर्त्ति। तथा हि, ऐदंयुगीनां जिनगृहवासमन्तरेणोद्यानवासो वा स्यात् परगृहवासो वा स्यादिति विकल्पयुगलकमुदयपदवीमासादयति। तत्र द्वितीयविकल्पः समुत्पन्नः किल दासेरक इव प्रथमत एव निर्वैरपदप्रहारजर्जरीकृताङ्गत्वेन नोत्थातुमुत्सहते। प्रथमोद्यानपक्षोऽप्यसपक्ष इव नासत्पक्षविक्षेपदक्षतामुपक्षिपति। स्त्रीसंसक्त्याद्याधाकर्मिकादिदोषकलाकलितत्वात्। तथा हि—उद्यानेऽपि निवसतां यतीनां नूतनचूताङ्कुरास्वादकूजत्कलकण्ठपञ्चमोद्गारेणोन्मीलद्दहलविचिकिलवकुलमालतीपरिमलेन च तन्तन्यते समाहितचेतसामप्युत्कलिकोल्लासः। पञ्चमोद्गारादीनामुद्दीपनविभावत्वेन भरतादिशास्त्रेऽभिधानात्। तथा, चिक्रीडिषागतकामुककामिनीसंकुलत्वेन स्त्रीसंसक्त्यादौ पुनः किं ब्रूमहे। अथ वा नवनवतरशास्त्राभ्यासपरावर्तनपराणां यतीनां मा भूवन्नेतज्जन्या दोषाः, तथापि लोकसंचारशून्योद्यानभूमौ वसतां सतां चौरचरटभटादिभिर्वस्त्रपात्राद्युपकरणापहारस्यापि संभवः। तदपहारे च शरीरसंयमविराधनाप्रसङ्गः। अथ '**समोसढा उज्जाणे भयवंतो जुगंधरायरिया**।' तथा '**ठिओ भयवं वइरसामी उज्जाणे**' इत्याद्यनेकधोद्यानवासः श्रूयत इति चेत्, सत्यम्; सोऽनापातासंलोकगुप्तैकद्वारोद्यानविषयः। तस्य च प्रायेण कलिकाले लोकस्य राजतस्करचरटाद्यु-

पल्लवैर्बाधितत्वेन दौःस्थ्यादसंभव एव—इत्युद्यानवासः कथमधुनातनमुनीनां कल्प्यमानः शोभेत ।
तस्मादिदानीं जिनगृहवास एव साधूनां सगतः प्रतिभाति । न च तत्राधाकर्मिकादयो दोषाः । तथा च
प्रयोगः—चैत्यमिदानींतनमुनीनामुपभोगयोग्यम्, आधाकर्मादिदोषरहितत्वात् तथाविधाहारवत् ।
न चायमसिद्धो हेतुः, जिनप्रतिमार्थं निष्पादिते आयतने आधाकर्मादिदोषानवकाशात् । यत्यर्थं क्रियमाणे हि
तस्मिन्नाधाकर्मादिदोषः प्रादुर्भवेत् । किं च यतीनां चैत्यनिवासमन्तरेण सांप्रतिकजिनभवनानां हानिः स्यात् ।
तथा हि—पूर्वं कालानुभावादेव श्रीमन्तोऽव्यग्रचेतसो देवगुरुतत्त्वप्रतिपत्तिभरनिर्भरतयैतदेव परं तत्त्वमिति
मन्यमानाः श्रावकाः परमादरेण चैत्यचिन्तामकरिष्यत् । सांप्रतं तु दुःषमादोषान्नक्तंदिवं कुटुम्बसम्बल-
चिन्तातापजर्जरितचित्ततयेतस्ततो धावतां प्रायेण दुर्गतानां श्राद्धानां स्वभवनेऽप्यागमनं दुर्लभम्, आस्तां
जिनमन्दिरे । तथा च कुतस्त्या तत्समारचनादिचिन्ता तेषाम् । श्रीमतां तु प्रतिकलं मदालसवारविलासिनी-
घनसारशबलमलयजरसपंकिलपीनकुचकलशपीडनदुर्ललितानां निरन्तरमेव भूरिभूरि लिप्सया पार्थिवसेवा-
हेवाकिनां जिनगृहावलोकनमेव न संपद्यते, दूरे तच्चिन्ता । तदभावे च जिनसदनानां विशरारुता स्यात्;
तथा च तीर्थोच्छित्तिरापनीपद्यते । चैत्यान्तर्निवासे तु यतीनां तदुद्यमे च भूरि कालं जिनभवनान्यव-
तिष्ठेरन्; तथा च तीर्थाव्यवच्छेदः । तदव्यवच्छित्तिहेतोश्च किंचिदपवादासेवनस्यागमेऽपि समर्थनात् ।
यदाह—"जो जेण गुणेण हिओ जेण विणा वा न सिज्झए जं तु" इत्यादि । तदेवं सूक्ष्मेक्षिकया
विमृशतां विदुषां चेतसि चैत्यवास एवेदानीं संगतिमङ्गतीति ।'

§११) इत्यादि सूराचार्योपन्यस्तं समस्तमपि स्वहृदयेऽवधार्य, ततो 'भाविनि भूतवदुपचार' इति
न्यायादुक्तं समुत्कटप्रावादुककरटिकरटतटपाटनपटिष्ठनिष्ठुरप्रकोष्ठकेसरसटाभारभासुरकेसरिणा भगवता
श्रीजिनेश्वरसूरिणा । यथा—'भो भोः समासदः ! सदैव सर्वत्र यमलजननीप्रतिमामलहृदः किंचिद्-
युक्तायुक्तविचारविषयमुपन्यस्यमानं प्रेक्षापूर्वकारिणो मात्सर्यमुत्सार्य माध्यस्थ्यमास्थाय सावधानीभूय
शृण्वन्तु भवन्तः सन्तः । तत्र 'जिनभवननिवास एवेदानींतनमुनीनां समुचितस्तत्र निरपवादब्रह्मव्रतस्य
संभवाद्, यतीनां च तदेव गवेष्यत' इत्यादिना, 'बंभवयस्स अगुत्ती' इत्याद्यन्तेन यद् यतीनां परगृह-
वसतिदूषणं बभाषे भवता भवतापहारिहारिशीलशालिना; तदिदानीं विकल्पपूर्वकं विचार्यते । तथा
हि—यदियं परगृहवसतिः दूष्यते भवता यतीनां तत् किं सर्वदा उत इदानीमेव ? यद्याद्यः पक्षः,
तदानीमुद्यानादिषु वसतां यतीनां कथंचिच्चौराद्युपद्रवात् कथं प्रतीकारः स्यात् ? । न च तदानीं कालसौस्थ्येन
चौराद्युपसर्गाभावात् उद्यानवास एव यतीनां श्रूयते न परगृहवास इति वाच्यम् । तदापि तस्कराद्युपद्रव-
स्यानेकधाऽऽकर्णनात् । तथा तस्मिन्नपि काले मुनीनां परागाराश्रयस्यागमेऽभिधानाच्च । यदुक्तम्—

बाहिरगामे वुच्छा उज्जाणे ठाणवसहिपडिलेहा । इहरा उ गहियभंडा वसहीवाघायउड्डाहो ॥
सव्वे वि य दिंडंता वसहिं मग्गंति जह उ समुद्दाणं । लद्धे संकलियनिवेयणं तु तत्थेव उ नियट्टे ॥

तथा वृषभकल्पनया स्थापिते ग्रामादौ यतीनां वसतिगवेषणचिन्तायामुक्तम्—
नयराइएसु घिप्पइ वसही पुव्वामुहं ठविय वसहं । वामकडीइ निविट्ठं दीहीकयअग्गिमेकपयं ॥
सिंगक्खोडे कलहो ठाणं पुण नत्थि होइ चलणेसु । अहिठाणे पुट्टरोगो पुच्छम्मि य फेडणं जाण ॥
मुहमूलम्मि य चारी सिरे य ककुहे य पूयसक्कारो । खंधे पट्टीइ भरो पुट्टम्मि य धायउ वसहो ॥

न चैवंविधा वसतिर्ग्रामादिमध्यमन्तरेण संगच्छति । उद्यानवासे पुन च तदानीमभिमते प्रतिपद-
मुक्तन्यायेन ग्रामाद्यन्तर्वसतिनिरूपणा नोपपद्येत । एवं च तदानीमपि परगृहवसतेर्यतीनां बाधात्
प्रथमः पक्षः ।

अथ द्वितीयपक्षः कक्षीक्रियते। अत्रापि पृच्छामः—कुतो दोषादधुनैव यतीनां परगृहवासो दूष्यते? 'स्त्रीसंसक्त्यादे'रिति चेत् न, अस्य दोषस्य तदानीमपि भावात्। न च तदापि तत्संसक्तिरहितवसतिपरिग्रहे तदलाभे वाऽभिहितयतनां विहायान्यः समाधिः। तथा च स इदानीमप्याश्रीयताम्, न्यायस्य समानत्वात्। एवं च उक्तयतनाविधायिनां स्त्र्यादिसंसक्तवसताविदानीमपि ब्रह्मचर्यगुप्त्यादयो दोषाः परास्ताः। यदपि 'तस्मादिदानीं जिनगृहवास एव साधूनां संगतः प्रतिभाती'त्यादि, 'यत्यर्थं क्रियमाणे हि तस्मिन्नाधाकर्मादिदोषः प्रादुर्भवेद्' इत्यन्तमुक्तम्, तदप्यधिकतरदोषकवलितत्वेन चौरचरटत्रासोल्लासात् पलायमानस्यात्यन्तरौद्राकारसमग्रसनरसिकरसनापिशाचाक्रान्तविकटाटवीसंकटनिपातकल्पनामुपकल्पयति। तथा हि, परगृहे कदाचिदाधाकर्माङ्गनासंसक्तिप्रभृतिदोषदर्शनात् तत्त्यागेन जिनसदनान्तर्निवसतां सतां शीलधनवतां साधूनां प्रत्यहं भगवत्पुरतः स्फारशृङ्गारोदाररम्भातिलोत्तमावतारतारमधुरस्वरगायन्नृत्यद्वारविलासिनीसाङ्गभङ्गसानङ्गापाङ्गनिरीक्षणक्षणदाकराकरवदनकुन्दकलिकाविशदरदनमसृणपक्ष्माहीनपीनस्तनघटपृथुलश्रोणीतटप्रलोकनादिवातसंधुक्षणेनेदानीं तथाविधसत्त्वविवेकविकलशैक्ष्यादिमुनीनां कथं सातिरेका मन्मथविकाराङ्गारा न दीप्येरन्? ततश्चेदमुपस्थितम्—

यत्रोभयोः समो दोषः परिहारश्च तादृशः। नैकः पर्यनुयोज्यः स्यात् तादृश्यार्थविचारणे॥

प्रत्युतायं विशेषोऽस्मत्पक्षे स्त्रीसंसक्तपरगृहे कदाचिद् वसतामप्युक्तदोषासंभवः, तत्र यतनाभिधानात्। भवत्पक्षे तु चैत्यवासस्य सर्वथा वर्जनीयत्वेन क्वचिदपि यतनाऽनभिधानादेतद्दोषपोषः केन वार्यते। न च वक्तव्यं गृहिगृहाणां संकीर्णत्वाद् यतनाकरणेऽपि नोक्तदोषमोषः कर्तुं शक्यत इति। प्रमाणयुक्तस्यैव गृहिमन्दिरस्य प्रायेण यत्याश्रयणीयत्वेनाभिधानात्, तत्र चोक्तदोषपरिहारस्य सुशकत्वात्। अतएव गृहिणा सकलगृहससर्पणेऽपि यतीनां तस्यान्यस्य वा दौर्मनस्यनिरासाय मितावग्रहाध्यासनं सूत्रे प्रत्यपादि। यदुक्तम्—

एवमम्ह वि जं जोग्गं तं देयं जइ भणिज्ज इय भणिओ।
चुल्ली खट्टा य ममं सेसमणुन्नाया तुब्भ मए॥
अणुन्नाए वि सव्वम्मि उग्गहे वरसामिणा।
तहावि सीमं छंदंति साहू तप्पियकारिणो॥
झाणट्ठा य भायणधोवणट्ठा डुण्हट्ठया, अत्थणहेउयं वा।
मिउग्गहं चेव अहिट्ठयंति मासो व अन्नो व करिज्ज मत्तुं ति॥

प्रमाणयुक्तपरगृहालाभे तु संकीर्णेऽपि तस्मिन् यतनया वसतां न दोषः। यदुक्तम्—

नत्थि उ पमाणजुत्ता खुड्डलियाए वसंति जयणाए त्ति।

किं च जिनगृहवाससमर्थनमात्मनो महानर्थकारित्वान्न चारिमाणमञ्चति। सिद्धान्ते चैत्यान्तर्वासस्य मुनीनामत्यन्ताशातनाहेतुत्वेनोक्तत्वात्। तस्याश्चाल्पीयस्या अप्यनन्तभवामयवृद्धिकारणत्वेनापथ्यासेवनतुल्यत्वात्। तथा चागमः—

दुब्भिगंधमलस्सावि तणुरप्पेस अण्हाणिया। उभओ वाहओ चेव तेण ठंति न चेइए॥
जइ वि न आहाकम्मं भत्तिकयं तह वि वज्जियं तेहिं। भत्ती खलु होइ कह इहरा आसायणा परमा॥
आसायणमिच्छत्तं आसायणवज्जणा य सम्मत्तं। आसायणा निमित्तं कुव्वइ दीहं च संसारं॥

तस्मात् कथंचिदाधाकर्मिकवसतिनिवासस्यापि सिद्धान्ते प्रतिपादितत्वात्, जिनभवननिवासस्य चात्यन्तदूषितत्वाद् वसतिवासः साधूनामुपपन्न इति। तथा च प्रयोगः—यतीनां परगृहवासो विधेयः, निःसंगताऽभिव्यञ्जकत्वात्, शुद्धोञ्छग्रहणावदिति। तथा, यदपि च, 'किं च चैत्यवासमन्तरेणे'त्यादिना तथा

च 'तीर्थान्यवच्छेद' इत्यन्तेन तीर्थाव्यवच्छित्त्या चैत्यवासप्रतिष्ठापनम्' तदपि विचारभारगौरवाक्षमत्वात् केवलं मुग्धलोकविप्रतारणमेव । यतः केयं तीर्थाव्यवच्छित्तिः ? किं यतीनां चैत्यान्तर्वासेन भगवद्देवगृह-बिम्बाद्यनुवृत्तिः ? आहोस्वित् शिष्यप्रतिशिष्यपारंपर्येणाविच्छिन्नप्रसरा सम्यग्ज्ञानदर्शनचारित्रप्रवृत्तिः ? न तावदाद्यः, चैत्यवासमन्तरेणापि भगवद्बिम्बाद्यनुवृत्तिमात्रदर्शनात् । तथा हि — पूर्वदेशेऽद्यापि तादृक्प्राकृतलोकेन कुलदेवताबुद्ध्या नमसितकीकृता । अपेयामक्ष्यादिनाऽपि नमस्यमानानां जिनबिम्बानामनेकघोपलब्धेः, अन्यतीर्थिकपरिगृहीतानां च तेषां तथैवानुवृत्त्युपलम्भाच्च । तथा चैतावतैव भवदभिमततीर्थाव्यवच्छित्तिसिद्धेः किं निःफलेन चैत्यवाससंरम्भेण ? । न चैतावता तीर्थाव्यवच्छेदकार्येण निःश्रेयसादिफलसिद्धिः, मिथ्यादृष्टिपरिगृहीतानां प्रतिमानां मोक्षमार्गानङ्गत्वेनाभिधानात् । 'मिच्छद्दिट्ठिपरिग्गहियाओ पडिमाओ भावगामो न हुंति त्ति' वचनात् ।

अथ द्वितीयः [वि]कल्पस्तर्हि सैव तीर्थाव्यवच्छित्तिरभ्युपेयतां मोक्षमार्गत्वात्, किं तदनुगुणोत्सूत्रचैत्यवासाश्रयणेन ? यदुक्तम् —

'सीसो सज्झिलगो वा गणिच्चओ वा न सुग्गइं निंति । जत्थेयॅ नाणदंसणचरणा ते सुग्गईमग्गो ॥'

सम्यग्ज्ञानदर्शनचारित्रानुवृत्तिं विना च जिनगृहबिम्बसद्भावेऽपि तीर्थोच्छित्तिः । अत एव जिनान्तरेषु केषुचिद् रत्नत्रयविरहात् क्वापि जिनबिम्बसम्भवेऽपि तीर्थोच्छेदः प्रत्यपादि । स्वमतिकल्पिता चेयं भवता तीर्थाव्यवच्छित्तिरागमविसंवादित्वाद्धेयैव । यदाह —

'न य समयवियप्पेणं जहा तहा कयमिणं फलं देइ ।
अविमागमाणुवाया रोगतिगिच्छाविहाणं व ॥'

किं च भवतु जिनगृहाद्यनुवृत्तिस्तीर्थाव्यवच्छित्तिः, तथापि न यतिचैत्यवास-जिनगृहाद्यनुवृत्त्योः श्यामत्व-मैत्रतनयत्वयोरिव प्रयोज्य-प्रयोजकभावः । तथा हि — श्यामो देवदत्तो मैत्रतनयत्वात्; न चात्र श्यामत्वे मैत्रतनयत्वं प्रयोजकम्, किं तु शाकाद्याहारपरिणतिलक्षण उपाधिः । एवं न यतिचैत्यान्तर्वासप्रयुक्ता तदनुवृत्तिस्तदन्तर्वसद्भिरपि यतिभिः सातशीलतया तच्छीर्णजीर्णोद्धारादिचिन्तामकुर्वाणैस्तदनुवृत्तेरनुपपत्तेः; किं तु तच्चिन्ताप्रयुक्ता तदनुवृत्तिः । तां च श्राद्धैरेव कुर्वद्भिस्तदनुवृत्तिः कथं न स्यात् ? । न चोक्तन्यायेन श्राद्धानां दुर्गतानां श्रीमतां चेदानीं तच्चिन्ताकरणासंभव इति वाच्यम् । दुःषमादोषात् केषांचित् तथात्वेऽप्यन्येषां महात्मनां शुद्धश्रद्धाबन्धुराणां तत्संभवात् । तथा हि — दृश्यन्त एव संप्रत्यपि केचन पुण्यभाजः श्रावकाः स्वकुटुम्बभाराटोपं [स]क्षमतनयेषु निक्षिप्य जिनगृहादिचिन्तामेव सततं विदधानाः । अतस्तैरेवानुवृत्तिहेतुतच्चिन्तासिद्धेः किमिदानींतना भवादृशा अपि सूरयश्चैत्यापदेशादनेकानारम्भानारभमाणा मुधैव क्लिश्यन्त इति । यदि 'जो जेणे'त्यादिना तीर्थानुच्छित्तिहेतोरपवादासेवनेन चैत्यवासस्थापनम्, तदप्यविदितसिद्धान्ताभिप्रायतां भवतः प्रकटयति । अस्यान्यार्थत्वात् । अत्र हि यः कश्चिद् मत्यादिर्येन ज्ञानादिना गुणेनाधिको येन च विना यत्संघादिकार्यं महत्तमं न सिध्यति, तेन तत्र स्वगुणवीर्यस्फोरणं विधेयमित्ययमर्थः । तथा हि — एतदुत्तरार्द्धमेवं स्थितं 'सो तेण तम्मि कज्जे सव्वत्थामं न हावेइ' इति । अतो नैतस्मादपि भवदभिमतसिद्धिः ।

§१२) एवं च समस्तपरोपन्यस्तोपपत्तिनिराकरणाद् यतीनां जिनभवननिवासनिषेधसिद्धौ स्वपक्षे साधनमभिधीयते । जिनगृहवासो मुनीनामनुचितः, धापमानदेवद्रव्योपभोगादिमत्त्वात् । प्रतिमाप्रत्यो

भक्तवितीर्णबलिग्रहणवत् । न चायमसिद्धो हेतुः । तत्र संवसतां देवद्रव्योपभोगस्य शयनासनभोजनादिकरणेनानेकजन्मदारुणविपाकस्यावश्यंभावित्वात् । नापि विरुद्धः, हेतोर्मुनियोग्यताया व्याप्यत्वे हि स स्यात्; न चैवमस्ति ।

'देवस्स परीभोगो अणंतजम्मेसु दारुणविवागो । जं देवभोगभूमिसु वुड्ढी न हु वड्ढइ चरित्ते ॥'

इति सिद्धान्तेन देवभूमिभुञ्जानस्य यतेश्चारित्राभावेन विपाकदारुणत्वस्य प्रतिपादितत्वात् । नापि सत्प्रतिपक्षः । आगमोक्तत्वादिप्रतिबलानुमानस्य प्रागेव निरस्तत्वात् । नापि बाधितविषयः । प्रत्यक्षादिभिरनपहतविषयत्वात् । न च प्रत्यक्षेणैव संप्रति जिनगृहे वासदर्शने तद्वासस्य धर्मिणो मुन्ययोग्यतायाः साध्यधर्मस्य हेतुविषयस्य बाधितत्वेन विषयापहारात् कथं न हेतुर्बाधितविषय इति वाच्यम् । तेषां मुन्याभासत्वेन तत्र तद्वासदर्शनेनापि न तद्वासस्य मुन्ययोगताया बाधितत्वमिति हेतोर्विषयापहाराभावात् न बाधितविषयत्वमिति । ततश्चैत्यं मुनीनामुपभोगयोग्यम्, आधाकर्मादिदोषरहितत्वात्—इति भावत्को हेतुरुक्तन्यायेन मुनीनां चैत्योपभोगयोग्यताया देवद्रव्योपभोगादिदोषैरागमे बाधितत्वात् कालात्ययापदिष्टः । एवं च सति भगवद्गुणगायन-पण्यस्त्रीनर्तन-शङ्खपटहभेरीमृदङ्गाद्यातोद्यवादन-बकुलविचिकिलमालतीप्रमुखामोदितसकलजिनभवनमालापूजाविच्छित्तिविरचनादिभक्त्यर्हद्भवने देवद्रव्योपभोगात् ।

यदीच्छेन्नरकं गन्तुं सपुत्रपशुबान्धवः । देवेष्वधिकृतिं कुर्याद् गोषु च ब्राह्मणेषु च ॥
तथा—नरकाय मतिस्ते चेत् पौरोहित्यं समाचर । वर्षं यावत् किमन्येन माठपत्यं दिनत्रयम् ॥

इत्यादिप्रकारेण लोकनिन्दितात् माठपत्यात् दीर्घसंसारकार्याशातनातश्च कम्पमानाः साधवो जिनमतनिष्णाताः कथंचिन्न संवसन्ति । किं तु—

'ताहे सामी वासावासे उवागए तं चेव दूइज्जंतगगामं एइ । तत्थेगम्मि उडए वासावासं ठिओ ।'

तथा—'ताहे सामी रायगिहं गओ तत्थ बाहिरियाए तंतुवायग्गहसालाए एगदिसिं अहापडिरूवं अणुणवित्ता चिट्ठइ ।'

तथा—'अन्नया आयरिया मज्झण्हे साहुसु भिक्खं निग्गएसु सन्नाभूमिं गया वइरसामी वि पडिस्सयवालो त्ति ।'

इत्यादि आवश्यक-चूर्ण्यादिग्रन्थेषु बहुशो दर्शनात्; साक्षादेव तीर्थकृद्गणधरनिषेवितायाम्;

'संविग्गसण्णिभद्दग सुत्ते नीयाइ मुत्तऽहाछंदे । वच्चंतस्स पसु(?)वसहीपमग्गणा होइ ।'
इत्यादिना सप्रपञ्चं जिनादिभिरनेकधा प्रतिपादितायाम्; तथा—

'धन्या अमी महात्मानो निःसंगा मुनिपुंगवाः ।
अपि क्वापि स्वकं नास्ति येषां तृणकुटीरकम् ॥'

इत्यादिवचनसंदर्भलोकप्रशस्यधनकनकतनयवनितास्वजनपरिजनत्यागरूपपरिग्रहतामुख्यास्पदभूतायाम्;

तथा—सिज्जायरु त्ति भन्नइ आलयसामि त्ति ।'
तथा—'सिज्जायरो पहू वा पहुसंदिट्ठो न होइ कायव्वो ।'
तथा—मुत्तूण गेहं तु सपुत्तदारो वाणिज्जमाईहि कारणेहिं ।
सयं व······· चइज्ज देसं सिज्जायरो तत्थ स एव होइ ॥

तथा—जो देइ उवस्सयं मुणिवराण तवनियमजंभजुत्ताण ।
तेणं दिन्ना वत्थन्नपाणसयणासणविगप्पा ॥

इत्यादि-बहुधासिद्धान्ताक्षरदर्शनसजाततात्त्विकावबोधबुधजनबहुमतायां वसतावेव सत्याभिधेयानगारनामधेयाः साधवोऽवस्थानमानभ्रते, न त्वत्यन्तापवादेऽपि जिनसद्मनीति स्थितम् । इत्थमुपन्यासप्रबन्धेमोत्तरीकृतशून्यदिक्चक्रतारतरलावलोकनसूराचार्यं विधाय, ऊर्ध्वीकृतभुजदण्डेनोक्तं भगवता कदध्वध्वान्तध्वंसनभास्करेण श्रीजिनेश्वरसूरिणा । यथा—

एवं सिद्धान्तवाक्यैर्बहुविधघटनाहेतुदृष्टान्तयुक्तै-
रुक्तैरस्माभिरेतैरवितथसुपथोद्भासनोष्णांशुकल्पैः ।
कुग्राहग्रस्तचेताः परगृहवसतिं द्वेष्टि योऽसौ निकृष्टो
दुर्भाषी बद्धवैरः कथमपि न सतां स्यान्मतो नष्टकर्णः ॥

§१३) इति तार्किकसमासचक्रमानन्य, राजादिलोकप्रत्यायनार्थं भूयोऽप्यभिदधे श्रीजिनेश्वरसूरिणा—'महाराज ! युष्माकं लोके किं पूर्वपुरुषदर्शिता नीतिः प्रवर्तते, उताधुनिकपुरुषदर्शिता नूतना ?' राज्ञोक्तम्—'अस्मद्देशे समस्तेऽपि पूर्वजप्रणराजनीतिः प्रवर्तते नान्या ।' श्रीजिनेश्वरसूरिणोक्तम्—'महाराज ! अस्माकमपि मते गणधरैश्चतुर्दशपूर्वधरैश्च यो मार्गो दर्शितः स एव प्रमाणीक्रियते, नान्यः ।' राज्ञोक्तम्—'इत्थमेवैतत्, पूर्वपुरुषव्यवस्थापित एव पन्थाः सर्वत्र प्रमाणपदवीमध्यास्ते ।' जिनेश्वरसूरिणोक्तम्—'महाराज ! वयं दूरदेशादागताः, पूर्वपुरुषविरचितस्वसिद्धान्तपुस्तकानि न कानिचिदानीतानि । तदेतेषां मठेभ्यो महाराज ! यूयमानाययत पूर्वपुरुषविरचितसिद्धान्तपुस्तकगंडलकम्, येन युष्माकं प्रत्यक्षं सन्मार्गनिश्चयाक्षराणि दर्शयामः ।' ततो राज्ञोक्तम्—'अहो ! युक्तमेते वदन्ति; भो भोः श्वेताम्बरसूरयः ! स्वकीयं श्वेताम्बरमेकं प्रेषयत पुस्तकदर्शनार्थं येन मदीयपुरुषा आनयन्ति ।'

तत एतेषामेव पक्षस्तेष्वपि भविष्यतीति निश्चिन्वन्तः, श्रीजिनेश्वरसूरिवाग्भल्लिशल्यितान्तर्हृदया इवास्तनिशितवचनशस्त्रास्तूष्णींभूय स्थिताः सर्वेऽप्याचार्याः । राजपुरुषैस्तु गत्वा यद् प्रथमत एव हस्ते चटितं तदेवानीतं शीघ्रं पुस्तकगंडलकम् । आनीतमात्रमेव छोटितम् । तत्र श्रीदेवगुरुप्रसादाद् दशवैकालिकं चतुर्दशपूर्वधरविरचितं निर्गतम् । तत्र च प्रथममेवायं निर्जगाम श्लोको यथा—

'अन्नट्ठं पगडं लेणं भएज्ज सयणासणं । उच्चारभूमिसंपन्नं इत्थीपसुविवज्जियं ॥'

श्रीजिनेश्वरसूरिणोक्तम्—'एवंविधे परगृहे वसन्ति साधवो न देवगृहे ।' श्रीदुर्लभराजचित्तेऽतीव लग्नम्, भणितं च—'अहो ! यथा वदन्त्येते तथैवैतत् ।' सर्वैरप्यधिकारिभिर्ज्ञातं यदुत निरुत्तरीभूताः सर्वथाऽस्मद्गुरवः । ततः सर्वेऽधिकारिणो वदन्ति श्रीकरणिकप्रभृतयः प्रत्येकम्—देव ! एते अस्माकं गुरवः, एते अस्माकं गुरवः—इति । येन राजाऽस्मत्कारणेनाऽसद्गुरूनपि बहु मन्यते । राजा च न्यायवादी यावन्न किंचिज्जल्पति ।

§१४) अत्र प्रस्तावे भणितं विचक्षणशिरोमणिना श्रीजिनेश्वरसूरिणा—'महाराज ! कश्चिद्गुरुः श्रीकरणाधिकारिणः, कश्चिन्मांडपिकाधिकारिणः, कश्चिन्मन्त्रिणः, कश्चिच्छ्रेष्ठिनः समभूत् । महाराज ! या नदिः ( ? धिष्ठिः, प्र० ) सा कस्य सत्का भवति ?' राज्ञोक्तम्—'मदीया' । जिनेश्वरसूरिणोक्तम्—'तर्हि महाराज ! कोऽपि कस्यापि सम्बन्धी जातो वयं न कस्यापि ।' ततो राज्ञा आत्मसम्बन्धिनो गुरवः

